Digitized by Sarayu Trust Foundation Delhi and eGangotri.



# ॥*॥ अथ विवाहपद्धतिप्रारम्भः ॥*॥

एतत्सर्वाधिकाराः 'श्रीवेङ्कटेश्वर' यन्त्रालयाध्यक्षाधीनाः सन्ति.

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

# अथ विवाहपद्धतिविषयानुक्रमणिका ।



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

श्रीगणेशाय नमः ॥ ॥ अथ विवाहः ॥ ॥ तत्रकन्याहस्तेन षोडशहस्त मितमंडपं तद्दक्षिणदिशि पश्चिमां दिशमाश्रित्य मंडपसँल्लग्नमुत्तराभि मुखं कौतुकागारं मंडपाद्बहिरैशान्यां दिशि जामातृचतुर्हस्तासिकता दिपरिष्कृततुषकेशशर्करादिरहितां शून्यवेणुनिर्मितामाम्रपत्रादिशो भितां सुवस्त्राच्छादितां वेदीं च कारयेत् ॥ विवाहदिनेकृतनित्यक्रिय जामातृपित्रा आदौ मातृपूजापूर्वकमाभ्युदयिकं कर्त्तव्यम् । कन्यापिता च शुचिःशुक्लांबरधरः कृतनित्यक्रियोमातृपूजाभ्युदयिकेकृत्वार्हणवे लायां मंडपे यजमानः सपत्नीकउत्तरमुखउपविश्यकुशासनेवरंप्राङ्

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



मुखमुपवेश्य आचम्य स्वस्तिवाचनं कृत्वा प्रतिज्ञासंकल्पं कुर्यात् ॥ 
स यथा ॥ ॐतत्सदद्येत्याद्युक्त्वा अमुकगोत्रोऽमुकशर्माऽहं श्रुत्याद्यु
क्तफलावाप्तिकामोऽवगताऽनवगताऽनेकजन्माधिकरणककायवाङ्मन
सकृतकोटिशोमहापापोपपापशमनपूर्वकश्रीयज्ञपुरुषनारायणप्रीति
पुरस्सरं यावज्जीवपुत्रपौत्रप्रपौत्रादिसकलकुटुंबसहितात्मीयकलेवरा
नामयदीर्घायुष्ययुक्तधनधान्यसमृद्धिविशिष्टबहुतरसुखभोगावाप्त्य
नन्तरशतसहस्रशोऽश्वमेधराजसूयगृहमेधज्योतिष्टोमाग्निष्टोमादि 
महायागकोटिशःसूर्यग्रहणकालीनबहुतरब्राह्मणसम्प्रदानकदशगुणो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

त्तरधेन्वनडुद्यानवाजिसर्वसस्यसंपूर्णसवरत्नोपशोभितसर्वपृथ्वीवितर
णजन्यपुण्यप्राप्त्युत्तरतत्कन्यकाशरीरावस्थितरोमसमसंख्ययुगसह
स्त्रावच्छिन्नपरमानन्दभोगास्पदावाप्तिसाहितत्रिदिववासोत्तरकल्पको
टिशतावलीढब्रह्मलोकमहत्तत्त्वोत्तरश्रीविष्णुलोकवासकामनया अने
न वरेणास्यां कन्यायामुत्पादयिष्यमाणसन्तत्या द्वादशावरान्द्वाद
शपरान्पुरुषान्पवित्रीकर्त्तुमात्मनश्चश्रीनारायणप्रीतये ब्राह्मार्षप्राजा
पत्यान्यतमविवाहविधिना कन्यादानमहं करिष्ये ॥ तन्निर्विघ्नपरिस
माप्तिकामोगणपत्यादिपूजनं वरपूजनं च यथासंभवमहं करिष्ये॥१॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



इतियजमानकर्तृकसंकल्पः ॥ अथ वरकर्तृकः ॥ ॐ तत्सदद्येत्याद्यमु
कगोत्रोऽमुकशर्म्माश्रीलक्ष्मीनारायणप्रसादकरणकयावज्जीवं पत्न्या
सहाऽऽयुरारोग्यसम्पत्तिसमृद्धिपूर्वकं परमसुखप्राप्तये धर्मार्थकाम
सिद्ध्यर्थंसत्संस्कारस्वकीयोद्वाहकर्माहं करिष्ये ॥ तन्निर्विघ्नपरिसमा
प्तिकामो गणपत्यादीन्यथालब्धोपचारैरर्च्चयिष्ये ॥ इति वरकर्तृकसंक
ल्पः ॥ ततो गणेशौंकारषोडशमातृनवग्रहान्सर्पांश्च पूजयेत् ॥ अथ
विवाहप्रयोगः ॥ यजमानो वरस्य दक्षिणजानुसंबोध्य ॐ साधुभवा
नाऽऽस्तामर्चयिष्यामो भवंतमितिब्रूयात् ॥ ॐ अर्च्चयेतिप्रत्युक्तेवरोप



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वेशनार्थं शुद्धमासनं दत्त्वा विष्टरमादाय ॥ विष्टरस्तु पंचविंशतिदर्भ
मयःकूर्च्चोवेण्याकारोभवति ॥ ॐ विष्टरोविष्टरोविष्टर इत्यन्येनोक्ते ॐ
विष्टरःप्रतिगृह्यतामितिदातावदेत् ॥ ॐ विष्टरं प्रतिगृह्णामि इत्युक्त्वा
वरो विष्टरं गृहीत्वा ॐ वर्ष्मोऽस्मीति मंत्रस्य प्रजापतिर्ऋषिरनुष्टुप्
छंदोविष्टरो देवता वरोपवेशने विनियोगः ॥ ॐ वर्ष्मोऽस्मिसमानाना
मुद्यतामिवसूर्यः ॥ इमं तमभितिष्ठामि यो मां कश्चाभिदासति ॥
इति मंत्रेण आसने उत्तराग्रविष्टरोपरि वर उपविशेत् ॥ ततोयजमानः
पाद्यमंजलिनाऽऽदाय ॐ पाद्यंपाद्यंपाद्यमित्यन्येनोक्ते ॐ पाद्यंप्रतिगृह्य

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



तामितिदातावदेत् ॥ ॐपाद्यंप्रतिगृह्णामीत्युक्त्वायजमानांजलितोंज लिनापाद्यमादायवरः ॥ ॐविराजोदोहोसीतिमंत्रस्य प्रजापतिर्ऋषिरा पो देवता अनुष्टुप्छंदःपादप्रक्षालने विनियोगः॥ ॐविराजोदोहोसिवि राजोदोहमशीयमयिपाद्यायैविराजोदोहः ॥ इतिदक्षिणपादंप्रक्षालये त् । क्षत्रियश्चेदादौ वामचरणप्रक्षालनम् । अनेनैवविधिनाद्वितीयपादंप्र क्षाल्य ततः पूर्ववाद्विष्टरांतरंगृहीत्वा पादयोरध उत्तराग्रं वरःकुर्यात् ॥ ततोदूर्वाक्षतफलपुष्पचंदनयुतार्घपात्रं गृहीत्वायजमानः ॥ ॐअर्घो ऽर्घोऽर्घ इत्यन्येनोक्ते ॐअर्घःप्रतिगृह्यतामितिदाता वदेत् ॥ ततोवरः



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ॐअर्घंप्रतिगृह्णामीत्युक्त्वाथयजमानहस्तादर्घंगृहीत्वा ॥ ॐआपःस्थे
तिमंत्रस्यप्रजापतिर्ऋषिरनुष्टुप्छंदआपोदेवताअर्घग्रहणेविनियोगः ॥
ॐआपःस्थयुष्माभिःसर्वान्कामानवाप्नवानि । इतिशिरस्यक्षतादिकं
किंचिद्दत्वा ॥ ॐसमुद्रंवइत्यादिमंत्रस्याथर्वणऋषिर्बृहतीछंदोवरुणो
देवताऽर्घजलप्रवाहणेविनियोगः । ॐसमुद्रंवःप्रहिणोमिस्वांयोनिमभि
गच्छत॥ अरिष्टास्माकंवीरामापरासेचिमत्पयः ॥ इत्यर्घपात्रस्थजल
मैशान्यांत्यजन्पठति । ततआचमनीयमादाय ॐआचमनीयमाचम
नीयमाचमनीयमित्यन्येनोक्ते ॐ आचमनीयंप्रतिगृह्यतामिति दाता

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



वदेत् ॥ ततोवरः ॐआचमनीयंप्रतिगृह्णामीत्युक्त्वायजमानहस्ता
दाचमनीयमादाय ॐआमागन्निति मंत्रस्य परमेष्ठीऋषिर्बृहतीछंदः
आपोदेवताअपामुपस्पर्शनेविनियोगः ॥ ॐआमागन्यशसासꣳसृजव
र्चसा ॥ तंमाकुरुप्रियंप्रजानामधिपतिपशूनामरिष्टंतनूनाम् ॥ इत्यनेन
सकृदाचामेत्द्विस्तूष्णीम् ॥ ततोदाताकांस्यपात्रस्थदधिमधुघृता
निकांस्यपात्रपिहितान्यादाय ॥ पलमेकंघृतंचैवद्विपलंदधिप्रोच्य
ते ॥ पलमेकं मधुकुर्यान्मधुपर्कविधिःस्मृतः ॥ ॐमधुपर्को मधुपर्को
मधुपर्कइत्यन्येनोक्तेॐमधुपर्कःप्रतिगृह्यतामितिदातावदेत् ॥ ततो



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वरः ॐमधुपर्कंप्रतिगृह्णामीत्युक्त्वा ॥ ॐमित्रस्येतिमंत्रस्यप्रजापति
ऋंषिःपंक्तिश्छंदोमित्रोदेवतामधुपर्कंदर्शनेविनियोगः ॥ ॐमित्रस्य
त्वाचक्षुषाप्रतीक्षे ॥ इति दातृकरस्थमेवनिरीक्ष्य॥ ॐदेवस्यत्वेतिब्रह्मा
ऋषिर्गायत्रीछंदः सविता देवता मधुपर्कग्रहणेविनियोगः ॥ ॐदेवस्य
त्वासवितुःप्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि ॥
इत्युक्त्वा मधुपर्कंपाणिभ्यां गृहीत्वा वामहस्ते कृत्वा ॥ ॐनमस्यावा
श्येति प्रजापतिर्ऋषिर्गायत्रीच्छंदः सविता देवता मधुपर्कालोडनेवि
नियोगः ॥ ॐनमस्यावाश्यायान्नशनेयत्तआविद्धंतत्ते निष्कृंतामि ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





इत्यनामिकया त्रिःप्रदक्षिणमालोड्य अनामिकांगुष्ठाभ्यां भूमौ क्षिपे
त् ॥ पुनस्तथैव द्विःप्रत्येकंक्षिपेत् ॥ ॐयन्मधुनइतिमन्त्रस्य प्रजाप
तिर्ऋषिर्मधुपर्कोदेवता अनुष्टुप्छंदोमधुपर्कप्राशनेविनियोगः ॥ ॐ य
न्मधुनोमधव्यं परमरूपमन्नाद्यं तेनाहंमधुनोमधव्येनपरमेणरूपे
णान्नाद्येनपरमोमधव्योन्नादोशानि ॥ इत्यनेनवारत्रयंमधुपर्कप्राश
नम् ॥ प्रतिप्राशनेचैतन्मंत्रपाठः ॥ ततोमधुपर्कशेषमसंचरदेशेधारये
त् गंडूषंकुर्यात् ॥ आचम्य ॥ ॐवाङ्मआस्येऽस्तु ॐनसोर्मेप्राणोस्तु
ॐअक्ष्णोर्मेचक्षुरस्तु ॐकर्णयोर्मेश्रोत्रमस्तु ॐबाह्वोर्मेबलमस्तुॐऊ

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वाँम ओजोस्तु ॐ अरिष्टानि मेंगानितनूस्तन्वामेसह संतु इत्यास्या
दिप्रत्येकंसर्वगात्राणिस्पृशेत् ॥ ॐगौंगौंगौंरित्यभिहितेयजमानेन ॥
ततोवरः ॐ माताद्रुद्राणांदुहितावसूनाᳫंस्वसादित्यानाममृतस्यना
भिः ॥ प्रणुवोचंचिकितुषेजनायमागामनागामदितिंवधिष्ट ॥ मम
चामुष्यचामुकशर्मणोयजमानस्योभयोः पाप्माहत ॐ उत्सृजत
तृणान्यत्तु इतितृणं छिंद्यात् ॥ ततोवेदिकायांतुषकेशशर्करादिरहि
तायां हस्तमात्रपरिमितचतुरस्त्रां भूमिं कुशैः परिसमूह्य तान्कुशानै
शान्यां परित्यज्य गोमयोदकेनोपलिप्यस्रुवेणस्फयेनवा प्रागग्रप्रादेश

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



मात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकांगुष्ठाभ्यामु
द्धृत्यजलेनाभ्युक्ष्यतत्रतूष्णींकांस्यपात्रस्थवह्निंप्रत्यङ्मुखंसमाधाय
तद्रक्षणार्थं कंचिन्नियुज्य कौतुकागाराद्बहिःकन्यामानीयमंडपेकन्याद्वै
मातुरोंकारलक्ष्मीकुबेरानर्चयेत् ॥ ततोयजमानःवरायवस्त्रचतुष्टयं
प्रयच्छतितेषुवरोवस्त्रद्वयंकन्यायैददातिवस्त्रद्वयंस्वयंपरिधत्ते । जरांग
च्छेतिमंत्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छंदोवासोदेवतावस्त्रपरिधानेविनि
योगः ॥ ॐजरांगच्छपरिधत्स्ववासोभवाऽकृष्टीनामभिशस्तिपावा ॥
शतंचजीवशरदःसुवर्चारयिंचपुत्राननुसंव्ययस्वायुष्मतीदंपरिधत्स्ववा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सः ॥ इतिपठित्वापरिधानवस्त्रंतस्यैददातिवरः ॥ याअकृन्तन्निर्तिमं
त्रस्यप्रस्कण्वऋषिर्वासोदेवतावस्त्रपरिधानेविनियोगः ॥ ॐयाअकृन्त
न्नवयंयाअतन्वतयाश्चदेवीस्तंतूनभितोततंथ ॥ तास्त्वादेवीर्जरसेसं
व्ययस्वाऽऽयुष्मतीदंपरिधत्स्ववासः ॥ इतिपठित्वोत्तरीयंददातिवरः।
परिधास्यैइतिमंत्रस्याथर्वणऋषिस्त्रिष्टुपूछन्दस्तन्तवो देवता वासःप
रिधाने विनियोगः ॥ ॐ परिधास्यै यशोधास्यै दीर्घायुत्वायजरदष्टि
रस्मि।।शतंचजीवामिशरदःपुरूचीरायस्पोषमभिसंव्ययिष्ये ॥ इति
पठित्वावरःपरिधत्ते इति अधोवस्त्रम् ॥ यशसेतिमंत्रस्यप्रजापतिर्ऋषि



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



जगतीछन्दोविधातादेवतावासोधारणेविनियोगः ॥ ॐ यशसामाद्या
वापृथिवीयशसेंद्राबृहस्पती ॥ यशोभगश्चमाऽऽविंदद्यशोमाप्रतिपद्यता
म् ॥ इतिपठित्वोत्तरीयंदधाति । ततोवरस्यकन्यायाश्चद्भिराचमनम् ।
ततः कन्याप्रदेनपरस्परंसमंजेथामिति प्रेषितयोःकन्यावरयोःपरस्प
रमभिमुखीकरणम् । तत्रवरपठनीयोमंत्रः ॥ समंजन्त्वितिमन्त्रस्या
थर्वणऋषिरनुष्टुप्छन्दोविश्वेदेवादेवता मैत्रीकरणे विनियोगः ॥ ॐ
समंजंतुविश्वेदेवाः समापोहृदयानिनौ ॥ संमातरिश्वा संधातासमु
देष्ट्रीदधातुनौ ॥ इति वरःपठेत् ॥ ततःकन्याप्रदकर्तृकग्रंथिबंधनंकंक



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

णबंधनंकन्यावरयोःकन्यायावरायतत्समयेपाणिग्रहणम् ॥ आचारा
त् ॥ ततःगोत्रोच्चारणंविप्रःकरोति ॥ कन्यादानम् ॥ ततोदाताशंख
स्थदूर्वाक्षतफलपुष्पचन्दनजलान्यादाय जामातृदक्षिणकरोपरि क
न्यादक्षिणकरं निधाय ॥ ॐ दाताहं वरुणो राजाद्रव्यमादित्यदैव
तम् ॥ विप्रोसौविष्णुरूपेणप्रतिगृह्णात्वयंविधिः ॥ विप्रातिरिक्तग्रही
तृपक्षेविप्रोऽसावित्यत्रवरोसावितिपठेत् ॥ इतिपठित्वा ॥ ॐ अ
द्यतत्सद्ब्रह्मणो द्वितीयेपरार्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वंतरेऽष्टा
विंशेकलौयुगेकलियुगप्रथमचरणेजम्बूद्वीपे भरतखंडे आर्यावर्ते पुण्य

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



क्षेत्रेऽमुकतौं मासोत्तमेऽमुकमासेऽमुकपक्षेऽमुकतिथावमुकवासरे
अमुकसगोत्रोऽमुकप्रवरोऽमुकशर्म्मा अमुकसगोत्रस्यामुकप्रवरस्या
मुकशर्मणः प्रपौत्राय ॥ १ ॥ अमुकसगोत्रस्यामुकप्रवरस्यामुक
शर्मणः पौत्राय ॥ २ ॥ अमुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः
पुत्राय ॥ ३ ॥ अमुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रीम् ॥
॥ १ ॥ अमुकसगोत्रस्याऽमुकप्रवरस्यामुकशर्मणः पौत्रीम् ॥२॥ अमु
कसगोत्रस्यामुकप्रवरस्यामुकशर्मणःपुत्रीम् ॥ ३ ॥ अमुकसगोत्रस्या
मुकप्रवरस्यामुकशर्मणःप्रपौत्राय ॥ १ ॥ अमुकसगोत्रस्यामुकप्रवर



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

स्यामुकशर्मणःपौत्राय ॥ २ ॥ अमुकसगोत्रस्यामुकप्रवरस्यामुकशर्म
णः पुत्राय ॥ ३ ॥ अमुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रीम्
॥ १ ॥ अमुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणःपौत्रीम् ॥ २ ॥ अमु
कसगोत्रस्यामुकप्रवरस्यामुकशमणः पुत्राम् ॥ ॥ ३ ॥ एवंगोत्रप्रवरपू
र्वकंप्रपितामहादिनामकन्यावरनामांत वारत्रय पठित्वा ममसमस्त
पितॄणांच समस्तपापक्षयपूर्वककल्पकोटिशतावधिनिरतिशयसानंद
ब्रह्मलोकमहीयमानादियावज्जीवपुत्रपौत्रादिसकलकुटुम्बसहितात्मी
यकलेवरानामयदीर्घायुष्ययुक्तधनधान्यसमृद्धिविशिष्टबहुतरसुखभो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



गावाप्त्यनन्तशतसहस्रशोऽश्वमेधराजसूयगृहमेधज्योतिष्टोमाग्निष्टो
मादियागकोटिशोदशगुणोत्तरधेन्वनडुद्यानरथवाजिसर्वसस्यसम्पूर्ण
सर्वरत्नोपशोभितसर्वपृथ्वीदानजन्यसमपुण्यप्राप्त्युत्तरैतत्कन्याशरी
रावस्थितरोमसमसङ्ख्ययुगसहस्रावच्छिन्नपरमानन्दभोगास्पदावा
प्तिसहितत्रिदिववासोत्तरकल्पकोटिशतावलीढश्रीविष्णुलोकवासका
मनयाऽनेनवरेणास्यां कन्यायामुत्पादयिष्यमाणसन्तत्या द्वादशाव
रान्द्वादशपरान्पुरुषान्पवित्रीकर्तुमात्मनश्च श्रीलक्ष्मीनारायणप्रीतये
च अमुकसगोत्राममुकप्रवराममुकनाम्नीमिमां कन्यां सुस्नातांयथाश



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

क्त्यलंकृतांगंधाद्यर्चितांवस्त्रयुगाच्छन्नां प्रजापतिदैवत्याममुकसगो
त्रायामुकप्रवरायामुकशाखाध्यायिनेऽमुकशर्मणे विष्णुरूपिणे ब्राह्म
णायवरायपत्नीत्वेनतुभ्यमहंसंप्रददे । ॐस्वस्तीतिप्रतिवचनम् । ॐद्यौ
स्त्वाददातुपृथ्वीत्वाप्रतिगृह्णातुइतिवरः पठन्प्रतिगृह्णीयात् ॥ ततःक
न्याप्रदः ॥ ॐअद्यकृतैतत्कन्यादानप्रतिष्ठार्थमिदंसुवर्णमाग्निदैवतममु
कसगोत्रायामुकप्रवरायामुकशर्मणेवरायदक्षिणांतुभ्यमहं संप्रददे इति
दक्षिणांदद्यात् ॥ ॐस्वस्तीतिप्रतिवचनं गोमिथुनंवाददद्यात् ॥ ॐकोऽ
दात्कस्माऽदात्कामोऽदात्कामायाऽदात् ॥ कामोदाताकामःप्रतिगृही

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



ताकामैतत्ते इतिवरःपठेत् ॥ ततस्तांपाणौगृहीत्वा ॥ यदेषीतिमन्त्रस्य दध्यङ्ङाथर्वणऋषिरनुष्टुप्छंदः पवमानोदेवता निष्क्रमणेविनियोगः ॥ ॐ यदेषिमनसादूरंदिशोनुपवमानोवा ॥ हिरण्यपर्णोवैकर्णः सत्वामन्मनसांकरोतु ॥ श्रीअमुकदेवीतिपठन्निष्कामति ॥ ततोवेदिदक्षिणस्यां दिशि वारिपूर्णदृढंकलशमूर्द्धंतिष्ठतोमौनिनः पुरुषस्यस्कन्धेऽभिषेकपर्य्यंतंधारयेत् ॥ ततः परस्परंसमीक्षेथामितिकन्याप्रदप्रैषानंतरम् ॥ अघोरचक्षुरित्यादिचतुर्णां मंत्राणां प्रजापतिर्ऋषिर्द्वितीयमंत्रस्यानुष्टुप्छंदस्त्रयाणां च त्रिष्टुप्छंदः सोमगन्धर्वाग्नयोदेवताःकुमारीसमीक्षणे



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

विनियोगः ॥ ॐ अघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यः सुमनाः सुव र्चाः ॥ वीरसूर्देवकामास्योनाशन्नोभवद्विपदे शं चतुष्पदे ॥ सोमः प्रथमोविविदेगंधर्वोविविद्उत्तरः ॥ तृतीयोग्निष्टेपतिस्तुरीयस्तेमनु ष्यजः ॥ सोमोददद्गंधर्वाय गंधर्वो दददग्नये ॥ रयिं च पुत्रांश्चादादग्नि र्मह्यमथो इमाम् ॥ सा नः पूषाशिवतमामेरयसानऊरूउशतीवि हर ॥ यस्यामुशंतःप्रहरामशेपंयस्यामुकामाबहवोविनिविष्ट्यै ॥ इति वरःपठित्वा मंत्रांतेपरस्परंनिरीक्षणम् । ततोऽग्निंप्रदक्षिणीकृत्यपश्चाद ग्नेरहतवस्त्रवेष्टिततृणपुलकेकटेवा दक्षिणपादंदत्त्वावधूंदक्षिणतःकृत्वा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



तामुपवेश्य स्वयमुपविशेत् ॥ वरः पुष्पचंदनतांबूलवस्त्राण्यादाय ॐ अद्यकर्तव्यविवाहहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकसगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे इतिब्रह्माणं वृणुयात् ॥ ॐअद्यकर्तव्यविवाहहोमकर्मणिकृताकृतावेक्षणरूपहोतृकर्मकर्तुममुकसगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्होतृत्वेन त्वामहं वृणे ॥ ॐ वृतोस्मीतिप्रतिवचनम् ॐ यथाविहितंकर्मकुर्वितिवरेणोक्तेॐकरवाणीतिप्रतिवचनम्। ततोऽग्नेर्दक्षिणतःशुद्धमासनंदत्त्वातदुपरिप्रागग्रान्कुशानास्ती



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

र्य्यंब्रह्माणमग्निप्रदक्षिणक्रमेणानीयअत्रत्वंमेब्रह्माभवेत्यभिधायकल्पि
तासनउपवेशयेत् । ततःप्रणीतापात्रंपुरतःकृत्वा वारिणापरिपूर्य्यकुशैरा
च्छाद्य ब्रह्मणोमुखमवलोक्याग्नेरुत्तरतःकुशोपरिनिदध्यात् । ततःपरि
स्तरणम् । बर्हिषश्चतुर्थभागमादायआग्नेय्याईशान्यंतंब्रह्मणोग्निपर्य्यंतं
नैर्ऋत्यावायव्यंतम् अग्नितःप्रणीतापर्य्यंतं ततोग्नेरुत्तरतःपश्चिमदिशिपवि
त्रच्छेदनार्थंकुशत्रयंपवित्रकरणार्थंसाग्रमनंतर्गर्भंकुशपत्रद्वयं प्रोक्षणी
पात्रम् आज्यस्थालीसंमार्जनार्थं कुशत्रयमुपयमनार्थंवेणीरूपकुशत्रयं
समिधस्तिस्रःस्रुवःआज्यं षट्पंचाशदुत्तरवरमुष्टिशतद्वयावच्छिन्नाम

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि. तण्डुलपूर्णपात्रंपवित्रच्छेदनकुशानांपूर्वपूर्वदिशि क्रमेणासादनीयम्॥ प.
१२ अथतस्यामेवादिशि असाधारणवस्तून्युपकल्पनीयानि तत्र शमीपला
शमिश्रालाजाहृषदुपलंकुमारीभ्राताशूर्पः दृढपुरुषःअन्यदप्युपयुक्तमा
लेपनादिद्रव्यम् । ततःपवित्रच्छेदनकुशैःपवित्रेच्छित्त्वासपवित्रकरेण
प्रणीतोदकं त्रिःप्रोक्षणीपात्रेनिधायानामिकांगुष्ठाभ्यामुत्तराग्रे पवित्रे
गृहीत्वा त्रिरुत्पवनम् । ततःप्रोक्षणीपात्रस्य सव्यहस्तेकरणम् । अना
मिकांगुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुहिंगनं प्रणीतोदकेन प्रोक्षणीप्रोक्ष १२
णं ततः प्रोक्षणीजलेन यथासादितवस्तुसेचनं ततोऽग्निप्रणीतयोर्मध्ये

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

प्रोक्षणीपात्रनिधानम् । आज्यस्थाल्यामाज्यनिर्वापः । ततोऽधिश्रयणं
ततोज्वलिततृणादिनाहविर्वेष्टयित्वाप्रदक्षिणक्रमेणपर्यग्निकरणम् । त
तः स्रुवप्रतपनं कृत्वा संमार्जनकुशानामग्रैरंतरतोमूलैर्बाह्यतःस्रुवसं
मार्जनं प्रणीतोदकेनाभ्युक्ष्य पुनः प्रताप्य स्रुवं दक्षिणतो निदध्यात्
आज्यस्याग्नेरवतारणंततआज्यस्यप्रोक्षणीवदुत्पवनम् । अवेक्ष्यसत्य
पद्रव्येतन्निरसनंपुनःपूर्ववत्प्रोक्षणीवदुत्पवनं ततउपयमनकुशान्वा
महस्तेनादायोत्तिष्ठन् प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः
समिधस्तिस्रः क्षिपेत् । तत उपविश्य सपवित्रप्रोक्षण्युदकेनप्रदक्षिण



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





क्रमेणाग्निपर्युक्षणंकृत्वा पवित्रेप्रणीतापात्रेनिधाय पातितदक्षिणजानुः कुशेनब्रह्मणान्वारब्धःसमिद्धतमेऽग्नौ स्रुवेणाज्याहुतिं जुहोति । तत्रा घारादारभ्य द्वादशाहुतिषु तत्तदाहुत्यनंतरं स्रुवावास्थिताहुतिशे षघृतस्यप्रोक्षणीपात्रेप्रक्षेपः ॥ ॐ प्रजापतयेस्वाहा ॥ इदंप्रजापतये० इतिमनसा ॥ ॐइंद्रायस्वाहाइदमिंद्राय०इत्याघारौ ॥ ॐअग्नयेस्वाहा इदमग्नये० ॥ ॐसोमायस्वाहा इदंसोमाय० इत्याज्यभागौ ॥ ॐभूः स्वाहा इदमग्नये०ॐभुवःस्वाहा इदंवायवे० । ॐस्वःस्वाहा इदंसूर्या य०एता महाव्याहृतयः॥ ॐ त्वन्नो अग्नेवरुणस्यविद्वान्देवस्यहेडो अ



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानो विश्वाद्वेषा ँसिप्रमुमु
ग्ध्यस्मत्स्वाहा॥इदमग्नीवरुणाभ्यां०॥ ॐसत्वन्नोअग्नेवमोभवोतीनेदि
ष्ठाअस्याउषसोव्युष्टौ । अवयक्ष्वणोवरुण ँरराणोवीहिमृडीक ँसुहवो
नएधिस्वाहा॥इदमग्नीवरुणाभ्यां०॥ॐअयाश्चाग्नेस्यनभिशस्तिपाश्च
सत्यमित्वमयाअसि ॥ अयानोयज्ञं वहास्ययानोधेहिभेषज ँस्वाहा॥
इदमग्नये० ॥ ॐयेतेशतंवरुणयेसहस्त्रंयज्ञियाःपाशाविततामहांतः ॥
तेभिर्नोअद्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतः स्वर्काःस्वाहा ॥ इदं वरु
णायसवित्रेविष्णवेविश्वेभ्योदेवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च० ॥ ॐउदुत्त

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



मंवरुणपाशमस्मदवाधमंविमध्यम श्रथाय ॥ अथावयमादित्यव्रतेत
वानागसो अदितयेस्यामस्वाहा॥इदंवरुणाय० ॥ एताःप्रायश्चित्तसंज्ञ
कास्ततोऽन्वारंभंविना ॥ ॐऋताषाडृतधामाग्निर्गंधर्वःसनइदंब्रह्मक्ष
त्रंपातुतस्मैस्वाहावाट् ॥ इदमृताषाहेऋतधाम्नेअग्नयेगंधर्वाय० ॥ ॐऋ
ताषाडृतधामाग्निर्गंधर्वस्तस्यौषधयोऽप्सरसोमुदो नामताभ्यःस्वा
हा ॥ इदमोषधिभ्योप्सरोभ्योमुद्भ्यो० ॥ ॐ सꣳहितोविश्वसामासू
र्योगंधर्वःसनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट् ॥ इदꣳसꣳहितायविश्व
साम्नेसूर्यायगंधर्वाय० ॥ ॐसꣳहितोविश्वसामासूर्योगंधर्वस्तस्यमरी



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

चयोप्सरसआयुवोनामताभ्यःस्वाहा ॥ इदंमरीचिभ्योऽप्सरोभ्यआ
युभ्यो० ॥ ॐसुषुम्णःसूर्यरश्मिश्चंद्रमागंधर्वः सन इदंब्रह्मक्षत्रंपातु त
स्मैस्वाहावाट् ॥ इदं॰सुषुम्णायसूर्यरश्मयेचंद्रमसेगंधर्वाय०॥ ॐ सुषु
म्णःसूर्यरश्मिश्चंद्रमा गंधर्वस्तस्य नक्षत्राण्यप्सरसोभेकुरयोनामता
भ्यःस्वाहा।इदंनक्षत्रेभ्योप्सरोभ्योभेकुरिभ्यो० ॥ ॐइषिरोविश्वव्यचा
वातोगंधर्वःसनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट् ॥ इदमिषिरायविश्व
व्यचसेवातायगंधर्वाय० । ॐइषिरोविश्वव्यचावातोगंधर्वस्तस्यापोप्स
रसऊर्ज्जोनामताभ्यःस्वाहा।इदमद्भ्योप्सरोभ्यऊर्ग्भ्यो०॥ ॐभुज्युःसु

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

 पर्णोयज्ञोगंधर्वःसनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट् ॥ इदंभुज्यवेसुप 
 र्णाययज्ञायगंधर्वाय० ॥ ॐभुज्युःसुपर्णोयज्ञोगंधर्वस्तस्यदक्षिणाऽप्सर
सःस्तावानामताभ्यःस्वाहा । इदंदक्षिणाभ्योऽप्सरोभ्यःस्तावाभ्यो०॥
ॐप्रजापतिर्विश्वकर्मामनोगंधर्वःसनइदंब्रह्मक्षत्रंपातुतस्मै स्वाहावाट्
इदंप्रजापतिविश्वकर्मणेमनसेगंधर्वाय० ॥ ॐ प्रजापतिर्विश्वकर्मा
मनोगंधर्वस्तस्यऋक्सामान्यप्सरसएष्टयोनामताभ्यःस्वाहा । इदं
मृक्सामभ्योप्सरोभ्यएष्टिभ्यो०॥इतिराष्ट्रभृत॥ ॐचित्तंचस्वाहा॥ इदं
चित्ताय०॥ ॐचित्तिश्चस्वा०॥ इदंचित्त्यै० ॐआकूतंचस्वाहा । इदमा 

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

कृताय० ॥ ॐआकूतिश्चस्वाहाइदमाकूत्यै०॥ ॐविज्ञातंचस्वाहाइदंवि
ज्ञाताय०॥ॐविज्ञातिश्चस्वाहाइदंविज्ञात्यै० ॥ ॐमनश्चस्वाहा इदंमन
से० । ॐशक्वर्य्यश्चस्वाहाइदंशक्वरीभ्यो० । ॐदर्शश्चस्वाहाइदंदर्शाय० ।
ॐपौर्णमासश्चस्वाहाइदंपौर्णमासाय० । ॐबृहच्चस्वाहाइदंबृहते०॥ ॐ
रथंतरंचस्वा०इदंरथंतराय० ॐ प्रजापतिर्ज्जयानिंद्रायवृष्णेप्रायच्छदु
ग्रःपृतनाजयेषु । तस्मैविशःसमनमंतःसर्वाःसउग्रःसइहव्योबभूवस्वा
हा ॥ इदंप्रजापतयेजयानिंद्राय० ॥ इतिजयाहोमः ॥ ॐअग्निर्भूताना
मधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यां पुरोधा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



यामस्मिन्कर्मण्यस्यांदेवहूत्याᳪंस्वाहा । इदमग्नये भूतानामधिपत
ये० ॥ ॐइन्द्रोज्येष्ठानामधिपतिःसमावत्वस्मिन्ब्रह्मण्यस्मिन्नक्षत्रेस्या
माशिष्यस्यांपुरोधायामस्मिन्कर्मण्यस्यांदेवहूत्याᳪंस्वाहा । इदमिं
द्रायज्येष्ठानामधिपतये० ॥ ॐयमःपृथिव्याअधिपतिःसमावत्वस्मिन्
ब्रह्मण्यस्मिन्नक्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देव
हूत्याᳪंस्वाहा। इदं यमाय पृथिव्या अधिपतये०॥ अत्रप्रणीतोदकस्प
र्शः ॥ ॐवायुरंतरिक्षस्याधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन्नक्षत्रे
स्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याᳪंस्वाहा ॥ इ



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

देवायवैंतरिक्षस्याधिपतये० ॥ ॐसूर्योदिवोऽधिपतिः समावत्वास्मिन्ब्र
ह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहू
त्याᳪस्वाहा । इदंसूर्यायदिवोऽधिपतये० ॥ ॐचंद्रमानक्षत्राणामाधिप
तिः समावत्वास्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यां पुरोधायाम
स्मिन्कर्मण्यस्यांदेवहूत्या स्वाहा। इदंचंद्रमसेनक्षत्राणामाधिपतये० ।
ॐ बृहस्पतिर्ब्रह्मणोधिपतिः समावत्वास्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामा
शिष्यस्यांपुरोधायामस्मिन्कर्मण्यस्यांदेवहूत्याᳪस्वाहा । इदंबृहस्प
तयेब्रह्मणोऽधिपतये० ॥ ॐ मित्रःसत्यानामाधिपतिःसमावत्वास्मिन्ब्र

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



ह्मण्यास्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामास्मिन्कर्मण्यस्यां देवहूत्याᳪं स्वाहा। इदमिन्द्राय सत्यानामाधिपतये०॥ ॐ वरुणोऽपामधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामास्मिन् कर्मण्यस्यां देवहूत्याᳪं स्वाहा । इदं वरुणायाऽपामधिपतये० ॥ ॐ समुद्रः स्रोत्यानामधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्यां०देवहूत्याᳪं स्वाहा । इदं समुद्राय स्रोत्यानामधिपतये० ॥ ॐ अन्नᳪं साम्राज्यानामधिपतिस्तन्मावत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामास्मिन्कर्मण्यस्यां देवहूत्याᳪं स्वाहा ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

इदमग्नाय साम्राज्यानामधिपतये० ॐ सोम ओषधीनामधिप
तिः समावत्वस्मिन्ब्रह्मण्यस्मिन्नक्षत्रेऽस्यामाशिष्यस्यां पुरोधाया
मस्मिन्कर्मण्यस्यां देवहूत्या ॅं स्वाहा । इदं सोमायौषधीनामधि
पतये० ॥ ॐ सविताप्रसवानामधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन्न
क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ॅं स्वा
हा ॥ इदंसवित्रेप्रसवानामधिपतये० ॥ ॐरुद्रःपशूनामधिपतिः समा
वत्वस्मिन्ब्रह्मण्यस्मिन्नक्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म
ण्यस्यांदेवहूत्याॅंस्वाहा ॥ इदंरुद्रायपशूनामधिपतये० अग्नप्रणीतो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



दकस्पर्शः ॥ ॐ त्वष्टारूपाणामधिपतिःसमावत्वस्मिन्ब्रह्मण्यस्मिन्
क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मण्यस्यांदेवहूत्याᳬस्वाहा ॥
इदंत्वष्ट्रेरूपाणामधिपतये० ॥ ॐविष्णुःपर्वतानामधिपतिःसमावत्व
स्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्य
स्यांदेवहूत्याᳬस्वाहा ॥ इदंविष्णवेपर्वतानामधिपतये० ॥ ॐमरुतोग
णानामधिपतयस्तेमाऽवंत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यां
पुरोधायामस्मिन्कर्मण्यस्यांदेवहूत्याᳬस्वाहा ॥ इदंमरुद्भ्योगणानाम
धिपतिभ्यो० ॥ ॐ पितरःपितामहाःपरेवरेततास्ततामहाइहतेमावंत्व



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

स्मिन्ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामास्मिन्कर्मण्य
स्यांदेवहूत्याᳬस्वाहा ॥ इदंपितृभ्यःपितामहेभ्यःपरेभ्योऽवरेभ्यस्तते
भ्यस्ततामहेभ्यो०॥अत्रप्रणीतोदकस्पर्शः।इतिअभ्यातानन्नामकम्।ॐ
अग्निरैतुप्रथमोदेवतानाᳬसोस्यैप्रजामुंचतु मृत्युपाशात्। तदयᳬराजा
वरुणोनुमन्यतायथेय ᳬस्त्रीपौत्रमघंनरोदात्स्वाहा ॥ इदमग्नये० ॥ इ
मामग्निस्त्रायतांगार्हपत्यःप्रजामस्यैनयतुदीर्घमायुः ॥ अशून्योपस्था
जीवतामस्तुमातापौत्रमानंदमभिविबुध्यतामियᳬस्वाहा। इदमग्नये०
॥ ॐस्वस्तिनोऽग्नेदिवापृथिव्याविश्वानिधेह्ययथायजत्र ॥ यदस्यां



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





महिदिविजातंप्रशस्तंतदस्मासुद्राविणंधेहिचित्रᳶस्वाहा ॥ इदमग्न
ये० ॐसुगन्नुः पंथांप्रदिशन्नऽएहिज्योतिष्मध्येह्यजरन्नआयुः ॥ अपैतुमृ
त्युरमृतंमआगाद्वैवस्वतोनोऽअभयंकृणोतुस्वाहा ॥ इदंवैवस्वताय
अत्रप्रणीतोदकस्पर्शः॥ततोवस्त्रेणअंतरपटपिधानम् । ॐपरंमृत्योअनु
परेहिपंथांयस्तेअन्यइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमा
नःप्रजाᳶरीरिषोमोतवीरान्स्वाहा ॥ इदंमृत्यवे० ॥ अत्रप्रणीतोदकस्प
र्शः ॥ ततोवधूमग्रतःकृत्वावधूवरौप्राङ्मुखौस्थितौभवतः ॥ ततोवरा
ञ्जलिपुटोपरिसंलग्नवध्वंजलिस्थघृताभिघारितवधूभ्रातृदत्तशमीपला



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

शमिश्रैर्लाजैर्वधूकर्तृकोमंत्रपाठपूर्वकोहोमः ॥ ॐ अर्यमणंदेवंकन्या अग्निमयक्षत । सनोअर्यमादेवःप्रेतोमुंचतुमापतेःस्वाहा।इदमर्यम्णे० ॐइयंनार्युपब्रूतेलाजानावपंतिका ॥ आयुष्मानस्तुमेपतिरेधंतांज्ञात योममस्वाहा। इदमग्नये० ॐ इमाँल्लाजानावपाम्यग्नौसमृद्धिकरणंत वाममतुभ्यंचसंवननंतदग्निरनुमन्यतामियः स्वाहा । इदमग्नये०।ततो वधूदक्षिणहस्तंसांगुष्ठंगृह्णातिवरः । ॐगृभ्णामितेसौभगत्वायहस्तंम यापत्याजरदष्टिर्यथासः ॥ भगोअर्यमासवितापुरंध्रिर्मह्यंत्वादुर्गार्ह पत्यायदेवाः ॥ १ ॥ अमोहमस्मिसात्वं सात्वमस्यमोअहंसामाहम

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



स्मिन्नृक्त्वंद्यौरहं पृथिवीत्वम् ॥ २ ॥ तावेहिविवहावहैसहरेतोदधा
वहै प्रजांप्रजनयावहैपुत्रान्विंद्यावहैबहून् ॥ ३ ॥ तेसंतुजरदष्टयः
संप्रियौरोचिष्णूसुमनस्यमानौ पश्येमशरदःशतंजीवेमशरदःशतꣳ
शृणुयामशरदःशतम् ॥ ४ ॥ अथवधूमग्नेरुत्तरतःप्राङ्मुखींपूर्वोपक
ल्पितदृषदुपलंदक्षिणपादेनारोहयातिवरः ॥ ॐ आरोहेममश्मानम
श्मेवत्वꣳस्थिराभव ॥ अभितिष्ठपृतन्यतोऽवबाधस्वपृतनायतः ॥
इतिमंत्रेण ॥ अथारूढायामेवतस्यांवरोगाथांगायति ॥ ॐ सरस्वति
प्रेदमवसुभगेवाजिनीवती ॥ यां त्वाविश्वस्यभूतस्यप्रजायामस्या



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

गतः यस्यामूताँसमभवद्यस्याविश्वमिदंजगत्तामद्यगाथां गास्यामि
यास्त्रीणामुत्तमं यशः ॥ ततोग्रेवधूःपश्चाद्वरःप्रणीताब्रह्मसहितमग्निप्र
दक्षिणकुरुतः तत्रवरपठनीयोमन्त्रः । ॐतुभ्यमग्रेपर्यवहन्सूर्यांवहतुना
सह ॥ पुनःपतिभ्योजायांदाअग्नेप्रजयासह ॥ ततःपश्चादग्नेःस्थित्वा
लाजहोमसांगुष्ठहस्तग्रहणाऽश्मारोहणगाथागानाग्निप्रदक्षिणानि पुन
रपिद्विस्तथैव एतेन नवलाजाहुतयः सांगुष्ठहस्तग्रहणत्रयम् अश्मारो
हणत्रयंगाथागानत्रयंप्रदक्षिणत्रयंचसंपद्यते ॥ ततोऽवशिष्टलाजैः क
न्याभ्रातृदत्तैरंजलिस्थशूर्पकोणेनवधूर्जुहोति ॥ ॐभगायस्वाहा ॥ इ

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



दंभगाय९अग्रेवरःपश्चाद्वधूस्ततस्तूष्णींचतुर्थंपरिक्रमणम्।ततोवरउप
विश्यब्रह्मणान्वारब्धआज्येनप्राजापत्यंजुहुयात् । ॐप्रजापतयेस्वाहा
इदंप्रजापतये० ॥ इतिमनसा अत्रप्रोक्षणीपात्रेहुतशेषाज्यप्रक्षेपः॥तत
आलेपनेनोत्तरोत्तरकृतसप्तमण्डलेषुसप्तपदाक्रमणं वरः कारयतिवक्ष्य
माणमंत्रैः तत्र प्रथम ॐएकामिषेविष्णुस्त्वानयतु कन्यावदाति ॥ धनं
धान्यंचामिष्टान्नंव्यञ्जनाद्यचयद्गृह ॥ मदधीनंचकर्तव्यं कन्याप्रथमप
देऽब्रवीत् १ वरः द्वितीये ॐ द्वेऊर्जेविष्णुस्त्वानयतु॥ कन्या० कुटुंबोत्प
त्तिमिच्छामित्वयाहमंजुभाषिणी ॥ सुखदुःखेचसंतुष्टाद्वितीयेसाब्रवी



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

दिदं २ वरस्तृतीये ॐत्रीणिरायस्पोषायविष्णुस्त्वानयतु ॥ कन्या०ऋतु
कालेशुचिःस्नाताक्रीडयामित्वयासह ॥ नाहंपरपातिंयामितृतीयेसाप
देऽब्रवीत् ३वरश्चतुर्थेॐचत्वारिमायोभवायविष्णुस्त्वानयतु ॥ कन्या०
लालयामि सुकेशांते गंधमाल्यानुलेपनैः ॥ कांचनैर्भूषणैस्तुभ्यं चतु
र्थेसापदेऽब्रवीत् ४वरःपंचमेॐपंचपशुभ्योविष्णुस्त्वानयतु ॥ कन्या०स
खीपरिवृतानित्यंगौर्य्याराधनतत्परा ॥ त्वयिभक्त्याभविष्यामिपंच
मेकन्यकाब्रवीत्५वरःषष्ठे ॐ षड्ऋतुभ्योविष्णुस्त्वानयतु ॥ होमय
ज्ञादिदानेषुवामांकेभवभामिनि ॥ यत्राहंतत्रातिष्ठत्वंपदेषष्ठेऽब्रवीद्वरः

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



६वरःसप्तमे ॐ सखेसप्तपदाभवसामामनुव्रताभवविष्णुस्त्वानयतु ॥
कन्या० इहसाक्षीचनौविष्णुर्ममभर्तृत्वमाव्रज ॥ ब्रह्मणाकृतपूर्वेणविधा
नेनकुलोत्तम ७ ततोऽग्नेःपश्चादुपविश्य पुरुषस्कंधस्थितकुंभादाम्रप
ल्लवेनजलमानीय तेनवरोवधूमभिषिंचति ॥ आपइतिप्रजापतिर्ऋषि
र्लिंगोक्तादेवतासुप्रतिष्ठाछंदःमूर्ध्न्यभिषेचनेविनियोगः ॥ ॐ आपःशि
वाःशिवतमाःशांताः शांततमास्तास्तेकृण्वंतुभेषजम्॥इत्यनेनकुंभात्पु
नस्तथैवानीयजलेनात्मानमभिषिंचति ॥ आपोहिष्ठेत्यादितिसृणांसिं
धुद्वीपऋषिर्गायत्रीछंदःआपोदेवतामूर्ध्न्यभिषेचनेविनियोगः ॥ ॐआ



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

पोहिष्ठामयोभुवस्तानऊर्ज्जैदधातन। महेरणायचक्षसे। ॐयोवःशिवत
मोरसस्तस्यभाजयतेहनः। उशतीरिवमातरः। ॐतस्माअरंगमामवो
यस्यक्षयायजिन्वथ॥आपोजनयथाचनः॥ इतितिसृभिर्वधूमात्मानं
चाभिषिञ्चतीति।ततःसूर्यमुदीक्षस्वेतिवधूंसंबोध्यवरोवदेत् ॐ तच्चक्षु
र्देवहितंपुरस्ताच्छुक्रमुच्चरत्। पश्येमशरदः शतंजीवेमशरदःशतꣳशृणु
यामशरदःशतंप्रब्रवामशरदःशतमदीनाःस्यामशरदः शतंभूयश्चशर
दःशतात्॥ इतिपठित्वावधूंसूर्यंदर्शयतिअस्तमितेसूर्येध्रुवमुदीक्षस्वे
तिप्रैषानंतरंध्रुवंपश्यतिवधूःतत्रवरपठनीयोमंत्रः ॐ ध्रुवमासिध्रुवंत्वाप

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





श्यामिध्रुवैधिपोष्यामयिमह्यंत्वादात् बृहस्पतिर्मयापत्याप्रजावतासं
जीवशरदःशतमूइतिपश्येत्सायदिनपश्यतितदापिपश्यामीतिब्रूयात्
अथवरोवधूदक्षिणांसस्योपरिहस्तंनीत्वातस्याहृदयमालभेत् ॥ ॐमम
व्रतेतेहृदयंदधामिममचित्तमनुचित्तंतेअस्तु ॥ ममवाचमेकमनाजु
षस्वप्रजापतिष्ट्वानियुनक्तुमह्यम् । इतिमंत्रेण । अथवधूमाभिमंत्रयतिव
रःपश्चात् । ॐसुमंगलीरियंवधूरिमा॰समेतपश्यतसौभाग्यमस्यैदत्त्वा
याथास्तंविपरेतन । इतिमंत्रेणवरस्यवामभागेकन्याअथवधूंबलवान्क
श्चिद्ब्राह्मणउत्थाप्यप्रागदग्वागुप्तागारेलोहितानडुहचर्मणिप्रातिलोमा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

स्तीर्णेउपवेशयेद्वरोवा ॥ ॐइहगावोनिषीदंत्विहाश्वाइहपूरुषाः ॥ इहो सहस्रदक्षिणोयज्ञइहपूषानिषीदतु इतिमंत्रेण ॥अथस्विष्टकृद्धोमः । ॐ अग्नयेस्विष्टकृतेस्वाहाइदमग्नयेस्विष्टकृते० । स्रुवावशिष्टाज्यस्यप्रोक्ष णीपात्रेप्रक्षेपःअयंचहोमोब्रह्मणान्वारब्धकर्तृकःसंस्रवप्राशनम् ॥ अ थाचम्य । ॐअद्यकृतैतद्विवाहहोमकर्म्मणिकृताकृतावेक्षणरूपब्रह्मक र्मप्रतिष्ठार्थमिदंपूर्णपात्रंप्रजापतिदैवतममुकगोत्रायामुकशर्म्मणे ब्रा ह्मणायब्रह्मणेसदक्षिणंतुभ्यमहंसंप्रददेइतिब्रह्मणेदक्षिणां दद्यात् ॥ स्व स्तीतिप्रतिवचनम् । ततोब्रह्मग्रंथिविमोकः। ॐसुमित्रियानआपओषध

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



यःसंतु इतिमंत्रेणपवित्रेगृहीत्वाप्रणीताजलेनशिरःसंमृज्यॐदुर्मित्रि
यास्तस्मैसंतुयोऽस्मान्द्वेष्टियंचवयंद्विष्मः इत्यैशान्यांप्रणीतान्युब्जी
करणम् । ततःआस्तरणक्रमेणबर्हिरुत्थाप्याज्येनाभिघार्यहस्तेनैवजु
हुयात् बर्हिर्होमः । तत्रमंत्रः । ॐ देवागातुविदोगातुंवित्वागातुमितम
नसस्पत । इमंदेवयज्ञꣳस्वाहावातेधाःस्वाहा । ततउत्थायवधूदक्षिणह
स्तेनस्रुवस्पृष्टेनघृतपुष्पफलैःपूर्णाहुतिः तत्रमंत्रः ॥ ॐमूर्धानंदिवोअ
रतिंपृथिव्यावैश्वानरमृतआजातमग्निम् ॥ कविꣳसंम्राजमतिथिंजनाना
मासन्नापात्रंजनयंतदेवाः स्वाहा ॥ ततउपविश्य स्रुवेणभस्मानीयदक्षि



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

णानामिकागृहीतभस्मना त्र्यायुषं जमदग्नेरिति ललाटे कश्यपस्य त्र्यायुषमिति ग्रीवायां यद्देवेषु त्र्यायुषमिति दक्षिणांसे तन्नोअस्तुत्र्या युषमिति हृदि अनेनैव क्रमेण वध्वा अपि त्र्यायुषं कुर्यात् ॥ तन्नोइत्य स्यस्थानेतत्ते इति विशेषः तत्रआचारात् शणशंखशमीस्वर्णप्रेरितंसिं दूरकरणंवरकर्तृकम् । ततोऽन्यैरपिप्रतिष्ठितस्त्रीपुंसैःसिंदूरकरणंग्राम्य वचनं वरः कुर्यात् ग्राम्याःस्त्रियः अथवेदितोमंडपमांगल्यदूर्वाक्षता दिग्रहणम् । ततस्त्रिरात्रमक्षारलवणाशिनौअधःशायिनौनिवृत्तमैथुनौ भवतः ॥ इति विवाहप्रकारः ॥ अथचतुर्थीकर्म्म॥ ततश्चतुर्थ्यामपररा

५

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

 

त्रेचतुर्थीकर्म तच्च गृहाभ्यन्तरएव कार्यं तैलोद्वर्तनादिकंकृत्वायुगल
काष्ठेउपविश्य प्राङ्मुखौवधूवरौउपविशतः तत्रकुशकंडिकारंभः। तत्र
क्रमःकुशैर्हस्तमितचतुरस्रां भूमिं परिसमुह्यकुशानैशान्यां निक्षिप्य
गोमयोदकेनोपलिप्यस्रुवमूलेनस्फ्येनवाउत्तरोत्तरतस्त्रिरुल्लिख्य उ
ल्लेखनक्रमेणोद्धृत्यवारिणातंदेशमभिषिच्य कांस्यपात्रेणाग्निमादाय
तत्रप्रत्यङ्मुखंनिदध्यात् पुष्पचंदनतांबूलवासांस्यादाय ॥ ततःॐअ
स्यांरात्रौ कर्तव्यचतुर्थीहोमकर्माणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्तुं
ममुकगोत्रममुकशर्म्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्र

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ह्मत्वेनत्वामहंवृणे वृतोस्मीतिप्रतिवचनम् ॥ ॐयथाविहितंकर्मकुर्वि
तिवरेणोक्ते ॐकरवाणीतिब्राह्मणवचनानंतरे अग्नेर्दक्षिणतः शुद्धमास
नंदत्त्वा तदुपरि प्रागग्रान्कुशानास्तीर्याग्निंप्रदक्षिणीकृत्याऽस्मिन्कर्म
णित्वंमेब्रह्माभवेत्यभिधाय ॐभवानीतितेनोक्तेतंब्रह्माणमुपवेशयेत् ।
ततःपृथूदकपात्रमग्नेरुत्तरतःप्रतिष्ठाप्यप्रणीतापात्रं पुरतःकृत्वा वारि
णापरिपूर्य्यकुशैराच्छाद्यब्रह्मणोमुखमवलोक्याग्नेरुत्तरतः कुशोपरि
निदध्यात् । ततःपरिस्तरणंबर्हिषश्चतुर्थभागमादायाग्नेयादीशानांतम
अपरचतुर्थभागेनब्रह्मणोऽग्निपर्यन्तंअपरेणनैर्ऋत्याद्वायव्यांतंअवशिष्ट

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



नअग्नितः प्रणीतापर्यंतंततोग्नेरुत्तरतः पश्चिमादिशि पवित्रच्छेदनार्थंकु
शत्रयं पवित्रकरणार्थं साग्रमनंतर्गर्भकुशपत्रद्वयं प्रोक्षणीपात्रम् आज्य
स्थालीसंमार्जनार्थंकुशत्रयम् उपयमनार्थंवेणीरूपकुशत्रयंसमिधस्ति
स्रः स्रुवः आज्यं षट्पंचाशदुत्तरवरमुष्टिशतद्वयावच्छिन्नामतंडुलपूर्णं
पात्रंचर्वर्थमामतंडुलाः एतानिपवित्रच्छेदनकुशानांपूर्वपूर्वदिशिक्रमे
णासादनीयानि । अथपवित्रच्छेदनकुशैर्वरःपवित्रेछित्वा प्रणीतोदकं
त्रिःसपवित्रकरेण प्रोक्षण्यांनिधाय अनामिकांगुष्ठाभ्यामुत्तराग्रेपवि
त्रेगृहीत्वात्रिरुद्दिंगनंप्रणीतोदकेनप्रोक्षणीप्रोक्षणम् । ततःप्रोक्षणीजलेन



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

यथासादितद्रव्यसेचनम् । ततोग्नेरुत्तरतःप्रणीतादक्षिणादिशिप्रोक्षणी
पात्रंनिदध्यात्। आज्यस्थाल्यामाज्यनिर्वापः प्रणीताजलंकिंचिच्चरौनि
धायप्रणीताजलेनैवतंडुलान्प्रक्षाल्यचरौक्षिपेत् स्वयंचरुंगृहीत्वाब्रह्म
णाचाज्यंवह्नावुत्तरतश्चरुंदक्षिणतआज्यंनिदध्यात् । ततोज्वलिततृणा
दिकमादायहविर्द्वयोपरिप्रदक्षिणंभ्रामयित्वा वह्नौ तत्प्रक्षेपःशृतेचरौ
वारत्रयंस्रुवप्रतपनं संमार्जनकुशानामग्रैरंतरतोमूलैर्बाह्यतःस्रुवसंमा
र्जनंप्रणीतोदकेनाभ्युक्ष्य पुनस्तथैवप्रताप्य स्रुवंदक्षिणतोनिदध्यात् ॥
ततःआज्यमग्नितश्चरोःपूर्वेणानीयाग्रतोनिदध्यात् पश्चिमेनचरुमानी

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

याज्यस्योत्तरतोनिदध्यात् । ततोवारत्रयंप्रोक्षणीवदाज्यस्योत्पवनम
वेक्ष्यसत्यपद्रव्येतन्निरसनंपुनःपूर्ववत्प्रोक्षण्युत्पवनम् । ततउपयमन
कुशान्वामहस्तेधृत्वा उत्तिष्ठन्प्रजापतिंमनसाध्यात्वा तूष्णीमग्नौ
घृताक्ताःसमिधस्तिस्रःक्षिपेत् । तत उपविश्यप्रोक्षणीजलेन अग्निं प्र
दक्षिणं पर्युक्ष्यपवित्रेप्रणीतापात्रे धृत्वा ब्रह्मणान्वारब्धःपातितदक्षिण
जानुर्जुहुयात् तत्राघारादारभ्याहुतिचतुष्टयेतत्तदाहुत्यनंतरं स्रुवाव
स्थिताज्यस्य प्रोक्षणीपात्रे प्रक्षेपः ॥ ॐ प्रजापतयेस्वाहा इदं प्रजा
पतये० । इतिमनसा ॥ ॐइंद्रायस्वाहा इदमिंद्राय०।इत्याघारौ। ॐअ

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ग्नयेस्वाहाइदमग्नये० ॥ ॐसोमायस्वाहा इदंसोमाय० ॥ इत्याज्यभा
गौ । तत आज्याहुतिपंचतयेस्थालीपाकाहुतौ च पूर्वोपकल्पितपृथूद
कपात्रे तत्तदाहुत्यनंतरंहुतशेषप्रक्षेपः आहुतिपंचतयेनान्वारंभः ॥ ॐ
अग्नेप्रायश्चित्तेत्वं देवानांप्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकामउप
धावामियास्यैपतिघ्नीतनूस्तामस्यैनाशयस्वाहा इदमग्नये० । ॐवायो
प्रायश्चित्तेत्वं देवानांप्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकामउपधावा
मियास्यैप्रजाघ्नीतनूस्तामस्यैनाशयस्वाहा इदंवायवे० ॥ ॐसूर्यप्रा
यश्चित्तेत्वंदेवानांप्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकाम उपधावामि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



यास्यै पशुघ्नीतनूस्तामस्यैनाशयस्वाहा इदंसूर्याय० ॥ ॐ चंद्र
मःप्रायश्चित्तेत्वं देवानांप्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकाम उप
धावामियास्यै गृहघ्नीतनूस्तामस्यैनाशयस्वाहा इदंचंद्रमसे० ॥ ॐ गं
धर्वप्रायश्चित्तेत्वं देवानांप्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकाम उप
धावामियास्यैयशोघ्नीतनूस्तामस्यैनाशयस्वाहा इदंगंधर्वाय० ॥ ततः
स्थालीपाकेनजुहोति ॐप्रजापतयेस्वाहा इदंप्रजापतये० । इतिमनसा
हुतशेषस्यपृथूदकपात्रेप्रक्षेपःअग्निमाहुतिदशकेतत्तदाहुत्यनंतरं हुत
शेषस्य प्रोक्षणीपात्रेप्रक्षेपः तत्रब्रह्मणान्वारब्धेनआज्यस्थालीपाका



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

भ्यां स्विष्टकृद्धोमः ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते० ॥
ततः आज्येन ॐ भूः स्वाहा इदमग्नये० । ॐ भुवः स्वाहा इदं वायवे० । ॐ
स्वः स्वाहा इदं सूर्याय० ॥ एता महाव्याहृतयः । त्वन्नो अग्ने वरुणस्य वि
द्वान्देवस्य हेडो अवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वे
षाँ सि प्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां० ॥ ॐ स त्वन्नो अग्ने व
मो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अवयक्ष्व नो वरुणँ रराणो वीहि
मृडीकँ सुहवो न एधि स्वाहा इदमग्नीवरुणाभ्यां० ॥ ॐ अयाश्चाग्नेस्य
नभिशस्तिपाश्च सत्वमित्त्वमया असि ॥ अया नो यज्ञं वहास्यया नो धेहि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



भेषजꣳस्वाहाइदमग्नये० । ॐ येतेशतंवरुणयेसहस्रंयज्ञियाःपाशावित
तामहांतः । तेभिर्न्नोअद्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतःस्वर्काःस्वाहा
इदंवरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यश्च । ॐ
उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय । अथावयमादित्य
व्रतेतवानागसोअदितयेस्यामस्वाहाइदंवरुणाय० ॥ इतिसर्वप्रायश्चि
त्ताख्याः।ॐप्रजापतयेस्वाहा इदंप्रजापतये० इतिमनसा ॥ इतिप्राजाप
त्यं ततःसंस्रवप्राशनम् ॥ ततआचम्यअस्यांरात्रौकृतैतच्चतुर्थीहोमक
र्म्मणिकृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदै



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वतममुकगोत्रायामुकशर्मणेब्राह्मणायब्रह्मणेदक्षिणांतुभ्यमहंसंप्रददे
इतिदक्षिणांदद्यात्स्वस्तीतिप्रतिवचनंततोब्रह्मग्रंथिविमोकः ॥ ॐसु
मित्रियानआपओषधयःसंतु इतिपवित्राभ्यांशिरःसंमृज्य ॐदुर्मित्रि
यास्तस्मैसंतुयोस्मान्द्वेष्टि यंचवयंद्विष्मः इत्यैशान्यांप्रणीतान्यु
ब्जीकरणंततः स्तरणक्रमेणबर्हिरानीयघृतेनाभिघार्यहस्तेनैवजुहुया
त। ॐदेवागातुविदोगातुंवित्वागातुमित ॥ मनसस्पत इमंदेवयज्ञंस्वा
हावातेधाःस्वाहा ॥ ततःपृथूदकपात्रस्थजलमादायाम्रपल्लवेनानीय व
राम्मूर्ध्निवधूमभिषिंचति। ॐयातेपतिघ्नीप्रजाघ्नीपशुघ्नीगृहघ्नीयशोघ्नीनिं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि. दितातनूर्जारघ्नींततएनांकरोमि साजीर्यत्वंमयासह श्रीअमुकदेवी प.
३० तिमंत्रेणततोवधूस्थालीपाकंप्राशयतिवरः ॥ ॐप्राणैस्तेप्राणान्संदधा
मि ॐअस्थिभिस्तेऽस्थीनिसंदधामि ॐ मांसैस्तेमांसानिसंदधामि
ॐत्वचातेत्वचंसंदधामि इतिमंत्रचतुष्टयेनमंत्रांतेऽन्नप्राशनम् ॥ ततो
वधूहृदयंस्पृष्ट्वावरःपठति ॐ यत्तेसुशीमेहृदयंदिविचन्द्रमसिस्थितंवे
दाहंतन्मांतद्विद्यात्पश्येमशरदःशतं जीवेम शरदःशतꣳशृणुयाम
शरदःशतमितिमंत्रेण ॥ अथकंकणमोक्षणकृतग्रंथिविमोकादीनिआ ३०
चारपरिप्राप्तानि ततउत्थायवधूवरदक्षिणहस्तस्पष्टस्त्रुवेणघृतफलपु

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ष्पैः पूर्णाहुतिंदद्याद्वरः ॥ ॐमूर्द्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआ
जातमग्निम्॥कविꣳसंम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाःस्वा
हा इतिमन्त्रेणपूर्णाहुतिंदत्त्वा ॥ ततःस्रुवेणभस्मानीयानामिकागृहीत
भस्मना ॐत्र्यायुषंजमदग्नेरितिललाटे ॐ कश्यपस्यत्र्यायुषमितिग्री
वायाम् ॐ यद्देवेषुत्र्यायुषमितिदक्षिणबाहुमूले ॐ तन्नोअस्तुत्र्यायुष
मिति हृदि इतित्र्यायुषं कुर्यात्॥ अनेनैवक्रमेण वध्वा अपि । तन्नोइत्य
स्यस्थाने तत्ते इति विशेषः॥ इति विशेषः॥ इतिचतुर्थीकर्म ॥ ॥ ॥
॥ अथसामग्रीलिख्यते ॥ आटा १ लड्डू २ चावल ३ गुड ४ रोली ५



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



केसर ६ पंचरंग ७ पराकडीया ८ धूप ९ दीप १० मौली ११ अटे १२ सुपारियां १३ दूर्वा १४ दोचनाठीकिला १५ दूने १६ शंखी १७ पुष्प १८ पुष्पमाला १९ पत्तरअम्बादे २० पटडी २१ सतवनीयापट २२ सिलवट्टा २३ छुहारे २४ पनहीकाकापूला २५ अहतवस्त्र गजएक २६ मेवा २७ कड़छियां २८ जंडीकेपत्तर २९ डांगा ३० चंदोये ३१ पारे ३२ छजलीलेक ३३ तुस्ताई ३४ घृत ३५ कुज्जे ३६ घडी ३७ दुग्ध ३८ दधि ३९ मधु ४० घृत ४१ गोमय ४२ पलाशसमिधा ४३ धोती ४४ उपर्णे ४५ अर्घजौल ४६ सिंदूर। सण ४७ शंखी ४८ फुल्लिया ४९ रेत



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

५० हल ५१ पंजाली ५२ वृक्षोंके पत्रखट्टे मीठे ५३ पूहला ५४ कोराव खगजएक ५५ कटोरिया ५६ रकेबी ५७ बटलोही ५८ छोटीजेइ ५९ करछा ६० छायापात्रकीकटोरियाँ ६१ ॥ इति सामग्री ॥ अथसंकल्पः । ॐ अद्यतत्सद्ब्रह्मअथानंतवीर्यस्यश्रीमन्नारायणस्याचिंत्याऽपरिमिताऽनंतशक्तिसमन्वितस्य स्वकीयमूलप्रकृतिपरमशक्त्या प्रक्रीडमानस्य सच्चिदानंदसंदोहरूपेस्वात्मनिसर्वाधिष्ठानेस्वाज्ञान कल्पितानां महाजलौघमध्येपरिभ्रममाणानामनेककोटिब्रह्माण्डाना मेकतमेस्मिन् ब्रह्मांडे अव्यक्तमहदहंकारपृथिव्यप्तेजोवाय्वाकाशा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

 

दिभिर्दशगुणोत्तरैरावरणैरावृते आधारशक्तिश्रीकूर्मवराहधर्मानंताष्ट
दिग्गजादिप्रतिष्ठिते ऐरावतपुंडरीकवामनकुमुदांजनपुष्पदंतसार्वभौ
मसुप्रतीकाख्याष्टदिग्दंतिशुंडादंडोत्तंडिते तदेतद्ब्रह्मांडान्तर्गतभूर्लो
कभुवर्लोकस्वर्गलोकमहर्लोकजनलोकतपोलोकसत्यलोकाख्यानां
सर्वज्ञसर्वशक्तिसर्वोत्तमसर्वाधिपश्रीचतुर्मुखप्रभृतिस्वस्वलोकाधिष्ठा
तृपुरुषाधिष्ठितानामधोभागे फणिराजराजस्य शेषस्य सहस्रफणा
मंडलैकफणोपरि सर्षपककणायमानमहीमंडलांतर्गताऽतलवितलसु
तलतलातलमहातलरसातलपातालानां स्वस्वाधिष्ठानाधिष्ठितानामु



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

परितनेसुमेरुमेरुमन्दरमंदराचलनिषधाहिमागिरिशृंगवद्धेमकूटदुर्धर
पारियात्रशैलमहाशैलमहेन्द्रसह्यमलयाचलविंध्यऋष्यमूकचित्रकूटमै
नाकमानसोत्तरत्रिकूटोदयाचलपर्यंतानेकाभिधानादिगणप्रतिष्ठिता
यां जंबूप्लक्षशाल्मलीकुशक्रौंचशाकपुष्कराख्यसप्तद्वीपवत्यांलवणक्षु
सुरासर्पिर्दधिक्षीरशुद्धोदकाख्यसप्तसागरसमन्वितायां समस्तभूरे
खायां कमलकदंबगोलकाकारायां वर्तमाने कुवलयकांशांतर्गतदल
वद्विराजमाने उत्तरकुरुहिरण्मयरम्यकभद्राश्वकेतुमालेलावृतहरिव
र्षकिंपुरुषभारताख्यनवखंडवति जंबूद्वीपे तत्खंडसर्वेभ्योऽप्यतिरिक्त

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





सारवतिदेवादिभिरप्यभीष्टसुकृतक्षेत्रभूतहेतुनाभिलषिततमे अंगवं
गकलिंगकांबोजसौवीरसौराष्ट्रमहाराष्ट्रवर्गालोकलमगधमालवनेपाल
केरलचोलगौडमलयपाञ्चालसिंहलमत्स्यद्राविडद्राविडकर्णाटराडवशू
रसेनकौंकणटौंकणपाण्ड्यपुलिन्ध्रान्ध्रद्रौणदशार्णविदेहविदर्भमैथिल
केकयकोशलकुन्तलमैन्ध्रुवजावलसर्वसिंधुमद्रमध्यदेशपर्वतकाश्मी
रपुष्टाहारासिन्धुपारासिकगांधारबाह्लीकप्रभृतिबहुविधदेशविशेषसंप
न्न–दण्डकारण्यमहारण्याद्वैतारण्यकामुकारण्यसैन्धवारण्यप्रभृत्यने
कारण्यवति श्रीगंगायमुनासरस्वतीगोदावरीनन्दाऽलकनन्दामन्दा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

किनीकौशिकीनर्मदासरयूकर्मनाशाचर्मण्वतीक्षिप्रावेत्रवतीकावेरीफ
लगूमार्कण्डेयरामगंगाशतद्रुविपाशैरावतीचन्द्रभागावितस्तासिन्धुदृ
षद्वतीप्रभृत्यनेकनदीनदवतिकुरुक्षेत्रहरिद्वारक्षेत्रमालक्षेत्रान्विते भर
तखंडे तत्रापिमध्यरेखाकुरुक्षेत्रात्पश्चिमे भागे चंद्रभागावितस्ताती
रयोर्मध्येश्रीश्वेतवाराहकल्पेवैवस्वतमन्वंतरे अष्टाविंशेकलौयुगेकलि
युगप्रथमचरणे आर्य्यावर्तै पुण्यबृहस्पतिक्षेत्रेशुभसंवत्सरेऽस्मिन् अ
मुकायनगते सूर्येऽमुकर्त्तावमुकमासेऽमुकपक्षेऽमुकतिथौ अमुकवास
रेयथायोगकरणमुहूर्त्ते वर्तमाने चन्द्रताराद्यानुकूल्ये पुण्येऽहनिअमुकगो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



त्रस्य यथोक्तप्रवरस्याऽमुकवेदिनोऽमुकशाखिनोऽमुकसूत्रिणोऽमुक
शर्म्मणः प्रपौत्राय अमुकशर्मणःपौत्राय अमुकशर्मणः पुत्राय एवमेव
अमुकप्रवरस्यअमुकवेदिनःअमुकशाखिनःअमुकसूत्रिणः अमुकनाम्नः
प्रपौत्रीम् अमुकनाम्नःपौत्रीम् अमुकनाम्नःपुत्रीम् इतित्रिरावर्त्त्य अमुक
गोत्राय यथोक्तप्रवराय अमुकवेदिने अमुकशाखिने अमुकसूत्रिणेअमु
कशर्मणे ब्राह्मणाय वरायअमुकगोत्रां यथोक्तप्रवराममुकनाम्नीमिमां
कन्यां यथाशक्त्यलंकृतां महद्वस्त्रद्वयावृतांविवाहदीक्षयादीक्षितांप्र
जापतिदैवतकांगंगावालुकाभिः सप्तर्षिमंडलपर्यंतराशीकृतरेणुपुंज



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

स्यमध्याद्वर्षसहस्रावसाने एकैकवालुकाकणापकर्षणेनसर्ववालुका
पकर्षणपरिमितकालपर्यंतं ब्रह्मलोकनिवाससिद्ध्यर्थं तिलैः सूर्यमंड
लंयावद्राशीभूततिलगिरितो वर्षसहस्रावसाने एकैकतिलापकर्षणेन
सर्वतिलापकर्षणसंमितकालपर्यन्तं सूर्यलोकनिवाससिद्ध्यर्थं यवैश्च
न्द्रमंडलपर्यंतं कृतयवराशितो वर्षसहस्रावसाने एकैकयवापकर्षणेन
सर्वयवापकर्षणपरिमितकालपर्यंतं चन्द्रलोकनिवाससिद्ध्यर्थं माषै
र्ध्रुवमण्डलपर्यन्तं राशीकृतमाषेभ्योवर्षसहस्रावसानएकैकमाषापक
र्षणसंमितकालं यावद्विष्णुलोकध्रुवलोकरुद्रलोकनिवाससिद्ध्यर्थं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



गन्धर्वाप्सरोगणमण्डितहंसपारावतशुकसारिकारुन्नादितकिंकिणी
शतसमलंकृतदिव्यविमानेन मनोभिलषितदेशगमनपूर्वकगिरिनदी
नदसिन्धुद्वीपादिव्यदेशनन्दनचैत्ररथप्रभृतिस्थानेषु स्वाभिलषितभो
ग्यविषयभोगार्थं मयासहदशपूर्वेषां दशावरेषां मद्वंश्यानामग्निष्टोमा
तिरात्रवाजपेयपुण्डरीकाश्वमेधयज्ञशतफलजन्यब्रह्मलोकादिनिवास
नार्थपत्नीत्वेनतुभ्यमहंसंप्रददे ॥ इतिदद्यात् । ततोदक्षिणा ॐ तत्सदद्य
इमां सपीठखट्वामुत्तानांगिरोदेवताकांचन्द्रदेवताकसरत्नसुवर्णरज
ताभरणबृहस्पतिदेवताककौशेयकार्पासश्वेतरक्तचित्रवस्त्रविश्वकर्मदे



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वताकरीतिकांस्यलोहभाजनप्रजापतिदेवताकपक्वान्नदुग्धौदनादिद्र
व्योपेताममुकगोत्रायामुकशर्मणे ब्राह्मणाय वराय तुभ्यमहं संप्रददे इ
तिदक्षिणा॥चिरंजीवतुमेमाताह्यरोगश्चास्तुमेपिता । भ्राताभवतुदीर्घा
युर्धनंधान्यंसदागृहे ॥१॥ अथाभिषेकमंत्राः॥सुरास्त्वामभिषिंचंतुब्रह्म
विष्णुमहेश्वराः॥वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥१॥ प्रद्युम्नश्चा
निरुद्धश्चभवंतुविजयायते ॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा
॥२॥वरुणःपवनश्चैवधनाध्यक्षःशिवस्तथा । ब्रह्मणासहितःशेषोदिक्पा
लाःपांतुतेसदा ।३। कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः॥बुद्धि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



लज्जावपुःशांतिस्तुष्टिःकांतिश्चमातरः ॥ ४ ॥ एतास्त्वामभिषिंचंतुदेव पत्न्यःसमागताः । आदित्यश्चंद्रमाभौमो बुधजीवसितार्कजाः ॥५॥ग्र हास्त्वामभिषिंचंतुराहुःकेतुश्चतर्पिताः ॥ देवदानवगंधर्वायक्षराक्षस पन्नगाः॥६ ॥ऋषयोमनवोगावोदेवमातरएवच ॥ देवपत्न्योद्रुमानागा दैत्याश्चाप्सरसांगणाः ॥ ७ ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानि च ॥ औषधानिचरत्नानिकालस्यावयवाश्च ये ॥ सरितःसागराःशैला स्तीर्थानिजलदानदाः ॥ एतेत्वामभिषिंचंतुधर्मकामार्थसिद्धये ॥ ९॥ इत्यभिषेकः ॥अथाशीर्मंगलानि आशीर्वचनपूर्वकं सर्वे सामाजिकाः



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

स्त्रियःपुरुषाश्चपुष्पाणिसंगृह्यएकैकंपुष्पमादाय ब्राह्मणकर्तृकमन्त्रा
ध्ययनं श्रुत्वा तथात्वंभवभर्तरीतिब्राह्मणोक्तमंत्रांतेस्वयमप्युक्त्वाग्र
थमंवध्वाउपरिप्रक्षिपेयुरिति ॥ अथमंत्राः ॥ गायत्रीब्रह्मणोयद्वल्लक्ष्मीर्दै
त्यरिपोर्यथा ॥ उमायथामहेशस्यतथात्वंभवभर्तरि ॥१॥ सुवर्चलाय
थार्कस्ययथाचंद्रस्यरोहिणी॥मदनस्यरतिर्यद्वत्तथात्वंभवभर्तरि ॥२॥
सुदक्षिणादिलीपस्यवसन्तस्यधृतिर्यथा ॥ अरुन्धतीवासिष्ठस्यतथात्वं
भवभर्तरि ॥ ३ ॥ रामस्यचयथासीताविनताकश्यपस्यच ॥ पावक
स्ययथास्वाहातथात्वंभवभर्तरि ॥४०॥ उषायथाऽनिरुद्धस्यदमयन्ती



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



नलस्यच ॥ सतीचर्तुपर्णस्यतथात्वंभवभर्तरि ॥ ५॥ पुलोमजायथें
द्रस्यवसुदेवस्यदेवकी ॥ लोपामुद्राह्यगस्त्यस्यतथात्वंभवभर्तरि ॥६॥
सूर्यस्यतपतीचैववसुदेवस्यरोहिणी ॥ चंद्रस्यरोहिणीयद्वत्तथात्वंभव
भर्तरि ॥७॥ शंतनोश्चयथागंगासुभद्राह्यर्जुनस्यच॥धृतराष्ट्रस्यगांधारी
तथात्वंभवभर्तरि ॥८॥ गौतमस्ययथाऽहल्यापाण्डवानांचद्रौपदी॥ वा
लिनश्चयथातारातथात्वंभवभर्तरि ॥९॥ मन्दोदरीरावणस्यराघवस्य
चजानकी ॥ कुंतीचपांडुराजस्यतथात्वंभवभर्तरि ॥१०॥अत्रेर्यथानसू
याचजमदग्नेश्चरेणुका। कृष्णस्यरुक्मिणीयद्वत्तथात्वंभवभर्तरि ॥११॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

भास्करस्यप्रभायद्वद्रोहिणीशिधुजस्यच ॥ कुंजेतेजोमयीयद्वत्तथात्वं
भवभर्तरि ॥१२॥ यथाचबोधिनीसौम्येभारतीवाक्पतेर्यथा ॥ भार्गवेव
लिनीयद्वत्तथात्वंभवभर्त्तरि ॥ १३ ॥ सूर्यपुत्रेयथासौम्यातमसस्ताम
सीयथा॥ केतौभोगवतीयद्वत्तथात्वंभवभर्त्तरि ॥१४॥ वासवस्ययथैंद्रा
णीकालीवैश्वानरस्यच॥धर्मिणीधर्म्मराजस्यतथात्वंभवभर्त्तरि ॥१५॥
निऋतेश्चधृतिर्यद्वद्वारुणीवरुणस्यच ॥ वायोर्वेगवतीयद्वत्तथात्वंभवभ
र्त्तरि ॥ १६ ॥ यक्षिणीधनदेयद्वत्पार्वतीशंकरस्यच ॥ सावित्रीवेधसोय
द्वत्तथात्वंभवभर्त्तरि ॥१७॥ अनंतस्ययथालक्ष्मीर्वसुदेवस्यरोहिणी ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





रेवतीबलभद्रस्यतथात्वंभवभर्त्तरि ॥ १८ ॥ धनपुत्रवतीसाध्वीसततं
भर्तृवल्लभा ॥ मनोज्ञाज्ञानसंरिताातिष्ठत्वंशरदांशतम् ॥१९॥जीवसूवी
रसूर्भद्रेबहुसौख्यसमन्विता ॥ सुभगाभोगसंपन्नायज्ञपत्नीपतिव्रता ॥
॥ २० ॥ अतिथीनागतान्साधून्बालान्वृद्धान्गुरूंस्तथा ॥ पूजयंत्याय
थान्यायंशश्वद्गच्छंतुतेसमाः ॥ २१ ॥ पृथिव्यांयानिरत्नानिगुणवंतिगु
णान्विते॥तान्याप्नुहित्वंकल्याणिसुखिनीशरदांशतम् ॥२२॥ पद्मामा
धवयोर्नगेंद्रतनयानागेंद्रकेयूरयोः स्वाहापावकयोरमर्त्यतटिनीकल्लो
लिनीनाथयोः ॥ पौलोमीपुरुहूतयोरथरतीपंचास्त्रयोः प्रेमवद्दंपत्योर्यु



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वयोश्चिरंभवतुतत्सौभाग्यसौख्यान्वितम् ॥ २३ ॥ लक्ष्मीर्यथासक
लदेवगणारिशात्रौगौरीयथापशुपतौचशचीसुरेंद्रे ॥ गायत्र्यपीहपरमे
ष्ठिनिसंप्रसक्तातद्वद्भवत्वमपिभर्तरिनित्यरक्ता ॥ २४ ॥ यद्वल्लक्ष्मीम
धुमथनयोः पत्रिणीचक्रनाम्नोर्यद्वन्नित्यं कुमुदशशिनोः पद्मिनीसूर्य
योश्च ॥ गाढप्रेम्णोर्गिरिशशिवयोःसुप्रसिद्धिश्चयद्वज्जायापत्योर्भवतुभ
वतोस्तद्वदेवत्रिलोके ॥ २५ ॥ अत्रिकश्यपवशिष्ठगौतमाव्यासगा
लवपुलस्त्यकौशिकाः ॥ गाधिशौनकमरीचिनारदामंगलंददतुते
ऽभिषेकजम् ॥ २६ ॥ सूर्यसोमकुजचंद्रनन्दनाजीवशुक्रशनिराहुके

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



तवः ॥ विष्णुकुंभसुतशंकरादयोमंगलंददतुतेऽभिषेकजम् ॥ २७ ॥
ब्रह्मावेदपतिः शिवः पशुपतिः शक्रः सुराणांपतिर्विष्णुर्यज्ञपतिर्हवि
र्हुतपतिर्धर्मः पितॄणां पतिः ॥ प्राणो देहपतिः सदागतिरयं ज्योति
ष्पतिश्चंद्रमाः सर्वे ते पतयः कुबेरसहिताः कुर्वंतु नो मंगलम् ॥ २८ ॥
मत्स्यः कूर्मतनुर्वराहनृहरी श्रीवामनो भार्गवस्तद्वद्दाशरथिश्चयाद
वपतिर्बुद्धोथकल्कीपतिः ॥ अन्येचापिसनत्कुमारकपिलप्रख्याः क
लांशाहरेः सर्वेतेकलिकल्मषघ्नचरिताःकुर्वंतुनोमंगलम् ॥ २९ ॥ आ
दित्योग्नियुतः शशीसवरुणोभौमःकुमारान्वितः सौम्योविष्णुयुतोगु



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

रुःसमघवादेव्यायुतोभार्गवः ॥ सब्रह्मार्विजोगणेश्वरयुतोराहुर्भुजं
गेश्वरोमांगल्यंसततंहराच्चनरताःकुर्वन्तुसर्वेग्रहाः ॥ ३० ॥ आयुर्द्रोण
सुतेश्रियोदशरथेशत्रुक्षयोराघवे ऐश्वर्यंनहुषेगतिश्चपवनेमानश्च
दुर्योधने ॥ शौर्य्यंशांतनवेबलंहलधरेसत्यंचकुंतीसुते विज्ञानं विदुरेभ
वंतुभवतःकीर्तिश्चनारायणे ॥ ३१ ॥ आयुष्मान्बहुपुत्रवान्भवचिरं
श्रीमान्यशस्वीभवप्रज्ञावान्भवभूरिभूतकरणैर्व्यापारदक्षोभव ॥ ते
जस्वीभववैरिदर्पदलनेदानैकनिष्ठोभव श्रीशंभोर्भव पादपूजनरतः स
र्वोपकारी भव ॥ ३२ ॥ आयुर्बलंविपुलमस्तुसुखित्वमस्तुसौभाग्य

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



मस्तुविशदातवकीर्तिरस्तु ॥ श्रेयोस्तु धर्म्ममतिरस्तुरिपुक्षयोस्तुसं
तानवृद्धिरभिवांछितासिद्धिरस्तु ॥ ३३ ॥ दीर्घायुर्भवजीववत्सरश
तंनश्यंतुसर्वापदःस्वास्थ्यंसंभजमुंचचंचलधियंलक्ष्म्यैकनाथो भव ॥
किंब्रूमोभृगुगौतमात्रिकपिलव्यासादिभिर्भाषितं यद्रामस्यपट्टाभिषे
कसमयेतच्चास्तु ते मंगलम् ॥ ३४ ॥ यावदिंद्रादयोदेवायावच्चंद्रदिवा
करौ ॥ यावद्धर्म्मक्रियालोकेतावद्भूयात्स्थितिस्तव ॥ २५ ॥ इतिमंगला
नि ॥ ॐ श्रीमत्पंकजविष्टरोहरिहरौवायुर्महेंद्रोनलश्चंद्रोभास्करवित्त
पालवरुणप्रेताधिपावैग्रहाः ॥ प्रद्युम्नोनलकूबरःसुरगजाश्चिन्तामणिः



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

कौस्तुभःस्कंदःशक्तिधरश्चलांगलधरःकुर्वंतुवोमंगलम् ॥ १ ॥ गौरीश्री
रदितिश्चकद्रुसुभगाभूतिः सुपर्णाशुभासावित्रीतुसरस्वतीवसुमतीस
त्यव्रताऽरुंधती ॥ स्वाहाजांबवतीचरुक्मभगिनीदुःस्वप्नविध्वंसिनीवे
लाचांबुनिधेःसमीनमकरा कुर्वंतुवोमंगलम्॥२॥ नेत्राणांत्रितयंशिवंपशु
पतेरग्नित्रयंपावनंयद्वद्विष्णुपदत्रयंत्रिभुवनेख्यातंचरामत्रयम् ॥ गंगा
वाहपथत्रयंसुविमलंवेदत्रयंत्रिस्वरंसंध्यानां त्रितयं द्विजैरभिहितंकुर्वं
तु० ॥ ३ ॥ अश्वत्थोवटवृक्षचंदनतरूमंदारकल्पद्रुमौ जंबूनिंबकदंबचू
तसरलावृक्षाश्चयेक्षीरिणः। सर्वैतफलमिश्रिताःप्रतिदिनंविभ्राजिताःस

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





वंतोरम्यंचैत्ररथंसनंदनवनंकुर्वंतु० ॥ ४ ॥ वाल्मीकिःसनकःसनंदनमु
निर्व्यासोवशिष्ठोभृगुर्जाबालिर्जमदग्निरत्रिजनकौगर्गोंगिरागौतमः ॥
मांधाताऋतुपर्णवेनसगराधन्योदिलीपोनलः पुण्योधर्मसुतोययाति
नहुषोकुर्वंतुवो० ॥ ५ ॥ ब्रह्मावेदपतिःशिवः पशुपतिःसूर्यश्चचक्षुष्पतिः
शक्रोदेवपतिर्यमःपितृपतिःस्कंदश्चसेनापतिः ॥ यक्षोवित्तपतिर्हरिश्च
जगतांवायुःपतिःप्राणिनामन्येयेपतयोवसंतिसततंकुर्वंतु० ॥ ६ ॥ गं
गासिंधुसरस्वतीचयमुनागोदावरीनर्मदा कावेरी सरयूर्महेंद्रतनयाच
र्मण्वतीवेदिका ॥ क्षिप्रावेत्रवतीमहासुरनदीख्यातायागंडकीपुण्याः



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

पूर्णजलाःसमुद्रसहिताःकुर्वंतु० ॥७॥ गंगांगोपतिर्गोमतीगणपतिर्गोविं
दगोवर्द्धनौगीतागोमयगोरजोगिरिसुतागंगाधरोगौतमः ॥ गायत्रीग
रुडोगयागिरिपतिर्गंभीरगोदावरी गंधर्वोग्रहगोपगोकुलगणाःकुर्वं० ॥
॥ ८ ॥ लक्ष्मीःकौस्तुभपारिजातकसुराधन्वंतरिश्चंद्रमागावःकामदु
घाःसुरेश्वरगजोरंभादिदेवांगनाः ॥ अश्वःसप्तमुखोविषंहरिधनुःशंखो
मृतंचांबुधेरत्नानीतिचतुर्दशप्रतिदिनं कुर्वंतुवोमंगलम् ॥ ९ ॥ इत्येवं
वरमंगलाष्टकमिदंपापौघविध्वंसकं पुण्यंसंप्रतिकालिदासकविनावृ
त्तप्रबंधीकृतम् ॥ यःप्रातःशृणुयात्समाहितमनानित्यंपठेद्भक्तिमान्गं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



गासागरसंगमेप्रतिदिनंस्नानस्यपुण्यंलभेत् ॥ १० ॥ एभिर्वरवध्वोः
शिरसिपुष्पमालासमर्प्पणम् ॥ इतिमंगलाष्टकंसमाप्तम् ॥ सीमंतेचवि
वाहेचतथाचातुर्थकर्म्मणि ॥ मखेदानेव्रतेश्राद्धेपत्नीदक्षिणतोभवेत् ॥
॥ १ ॥ संप्रदानेभवेत्कन्याघृतहोमेसुमंगली ॥ वामभागेभवेद्भार्य्यापि
तीचातुर्थकर्म्मणि ॥ २ ॥ यज्ञकालेविवाहेचदेवयागेतथैवच ॥ हूयमा
नेतथाचाग्नौनाशौचंनैवसूतकम् ॥ ३ ॥ इतिविवाहपद्धतिःसमाप्ता ॥

इदं पुस्तकं क्षेमराज-श्रीकृष्णदासश्रेष्ठिना मुम्बय्यां (खेतवाडी ७ वीं गली खम्बाटा लैन) स्वकीये "श्रीवेंकटेश्वर" ( स्टीम् ) मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् । संवत् १९७०, शके १८३५.



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

'बडासूचीपत्र] अलगहै। अन्य पुस्तकोंकी संक्षिप्तसूची-( कर्मकाण्डग्रन्थाः ) [मँगालीजिये.

| नाम. | की. रु.आ. |
|---|---|
| संस्कारभास्कर ( यजुर्वेदी सब संस्कारोंकी विधि प्रयोग और मंत्र सहित ) .... .... | २—१२ |
| कर्मसिद्धान्तदीपिका ( कर्मफल ) .... .... | ०—२ |
| रुद्री भाषाटीका .... .... .... .... | ०—१२ |
| ग्रहशान्ति .... .... .... .... .... | ०—८ |
| बृहत्कर्मकाण्डसमुच्चय .... .... .... .... | ०—६ |
| गयायात्रापद्धति ( सर्वविधिवर्णितहै ) .... .... | ०—४ |

| नाम | की. रु. आ. |
|---|---|
| वास्तुशांति .... .... .... .... .... | ०—९ |
| विनायकशांति .... .... .... .... .... | ०—१॥ |
| अष्टशांति .... .... .... .... .... | ०—२ |
| मूलशांति .... .... .... .... .... | ०—२ |
| आश्लेषाशांतिज्येष्ठाशांतिश्च .... .... .... | ०—१॥ |
| जन्मदिनपूजापद्धति .... .... .... .... | ०—२ |
| गोदानपद्धति .... .... .... .... .... | ०—१॥ |
| नवग्रहविधानपद्धति .... .... .... .... | ०—४ |

खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीमप्रेस-मुंबई.

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

